॥ श्रीः ॥

शुद्धि सिद्धान्तपञ्जिकान्तर्गता

# आशौच-पञ्जिका

जयपुर-राजसभा-प्रधानपण्डितेन विद्यावाचस्पतिना

श्रीमधुसूदनशर्ममैथिलेन

नानाविधधर्मशास्त्रनिबन्धतत्त्वानुसंधानपुरस्सरं

समुपनिबद्धा

सेयं

श्रीसूर्यनारायणशर्मणाऽऽचार्येण

श्रीगोस्वामिव्रजनाथशर्मणः

कारोनेशननाम्नि यन्त्रालये सुपनपुरे ( आगरा )

मुद्रापयित्वा

प्राकाश्यं नीता

प्रथमावृत्तिः ५०० | संवत् १९७५ | मूल्यमेकं रूप्यम्

प्राप्तिस्थानम्—श्रीसूर्यनारायणशर्मा, आचार्य, पुरानी बस्ती, घड़का कुआ, जयपुर।

॥ श्रीः ॥

शुद्धि-सिद्धान्तपञ्जिकान्तर्गता-

# आशौच-पञ्जिका

जयपुर-राजसभा-प्रधानपण्डितेन विद्यावाचस्पतिना

श्रीमधुसूदनशर्ममैथिलेन

नानाविधधर्मशास्त्रनिबन्धसद्व्यानुसंधानपुरस्सरं

समुपनिबद्धा

---

सेयं

श्रीसूर्यनारायणशर्मणाऽऽचार्येण

श्रीगोस्वामिव्रजनाथशर्मणः

कारोनेशननाम्नि यन्त्रालये सुभापुरे ( आगरा )

मुद्रापयित्वा

प्रकाश्यं नीता

---

प्रथमावृत्तिः ५०० } संवत् १९७६ { मूल्यमेकंरूप्यम्

धर्मशास्त्र का नूतन निबन्ध।

# 'आशौच पञ्जिका'

वर्तमान में जनता जो धर्म पर से हटती जारही है, उसके मुख्य दो कारण हैं— अज्ञान और अविश्वास। बहुधा श्रद्धालु होने पर भी मनुष्य धर्म की बहुत सी बातें जानते ही नहीं, तब वे शास्त्रानुसार आचरण कैसे करें? वर्तमान समय में विद्याप्रचार बहुत स्वल्प है, और हमारे धर्मशास्त्रों के निबन्धों की विचार-शैली ऐसी जटिल है कि साधारण विद्वान् भी उनका ठीक आशय नहीं समझ सकते— अल्प शिक्षितों और अशिक्षितों की तो बात ही क्या! उस समय स्मृति-वचनों पर वैसी मीमांसा की आवश्यकता थी, विरुद्ध वचनों की व्यवस्था बताना आवश्यक था, इसलिये वैसे निबन्ध लिखे गये थे; किन्तु आज बहुत लोग मीमांसा के शास्त्रार्थ जानना नहीं चाहते, वे थोड़े में सिद्धान्त की बात समझ लेना चाहते हैं। वैसे ग्रन्थ हमारे यहां उपस्थित नहीं। बड़े २ विद्वानों से पूछ कर ही सदा निर्णय करना भी इस समय के लोगों की रुचि के प्रतिकूल है; न सर्वत्र ऐसे विद्वान् मिलते ही हैं। इससे सर्व साधारण धर्म के सिद्धान्तों से बहुधा अनभिज्ञ ही रहते हैं और अज्ञान-वश बहुत सी धर्म-विरुद्ध क्रियाएँ उनके द्वारा होती हैं।

दूसरी बात यह कि केवल वचनमात्र पर आजकल के शिक्षितों का विश्वास नहीं होता। वे धर्म के प्रत्येक अङ्ग की युक्तिपूर्वक असलियत जानना चाहते हैं, जो कि सामयिक-रुचि के अनुकूल हमारे धर्म-निबन्धों से नहीं मिलती। और यों सर्वसाधारण का विश्वास क्रमशः विचलित होता जाता है। अतः धर्मरक्षक विद्वानों का समयानुकूल ग्रन्थ प्रस्तुत करना, इस समय प्रधान कर्तव्य है—इसमें कोई सन्देह नहीं।

जयपुर राज्य के प्रधान पण्डित—न केवल भारत में, किन्तु पाश्चात्य संस्कृत विद्वानों में भी प्रसिद्धि प्राप्त—विद्या-वाचस्पति श्री मधुसूदनजी ओझा ने सब शास्त्रों के रहस्य-बोधक समयानुकूल बहुत से ग्रन्थों का निर्माण किया है और कर रहे हैं। वेद, पुराण, दर्शन आदि की तरह धर्मशास्त्र के भी पूर्वोक्त प्रकार के समयानुकूल कई ग्रन्थ आपने बनाये हैं। उनमें से यह आशौचपञ्जिका सर्वसाधारण के लाभार्थ प्रकाशित की

जाती है। सम्बन्ध में मृत्यु अथवा जन्म होने पर कुछ काल के लिये कुटुम्बी अशुचि ( अपवित्र ) हो जाते हैं—जिसे कि सूतक, पातक, या आशौच शब्द से पुकारते हैं। इसका धर्मशास्त्रों में बड़ा विवेचन है। और प्रायः सब को ही इसके ज्ञान की आवश्यकता पड़ती है। किस को किस मौके पर कितना आशौच है, और उसमें क्या २ करना व क्या २ न करना चाहिये इसके ठीक ज्ञान के बिना या तो सर्व-साधारण मनमाना शास्त्रविरुद्ध आचरण कर पाप-भागी बनते हैं— या पण्डितों के घर दौड़ते फिरते हैं। इस कठिनता को यह ग्रन्थ मिटा देगा। इसके आरम्भ में आशौच क्या वस्तु है, सपिण्ड किसे कहते हैं, किसी की मृत्यु या जन्म पर कुटुम्बियों में क्यों अपवित्रता होती है—इत्यादि बातों को शास्त्र-रहस्य बतलाते हुए वैज्ञानिक युक्तियों से समझाया गया है—जैसा कि अद्भुत विवेचन प्रायः पाठक अन्यत्र नहीं देख सकते। प्रसङ्गागत-विवाह सापिण्ड्य की भी विवेचना हुई है, और कितना सम्बन्ध विवाह में छोड़ना यह स्पष्ट किया है। आगे के अध्यायों में आशौच का विषय ऐसी सरल संस्कृत भाषा में लिख दिया है कि जैसा अवसर है। वह अनुक्रमणिका में देख कर साधारण संस्कृतज्ञ भी अनायास कर्तव्य की व्यवस्था समझ सकते हैं। शास्त्रार्थ छोड़ कर केवल सिद्धान्त स्पष्ट समझा दिया है और वचन संग्रह आगे प्रथक् दे दिया है। विशेषता यह कि हरएक बात को नक़्शे दे देकर बड़ी सुस्पष्टता से समझाया है। हम इस पुस्तक की प्रशंसा करना नहीं चाहते; पाठक देख कर ही समझ सकेंगे कि सरलता से शास्त्र-रहस्य बताने की यह बिल्कुल नई परिपाटी है। और ऐसे ग्रन्थों की वर्तमान समय में अत्यन्त आवश्यकता है। यदि इस ग्रन्थ का लोक में आदर हुआ तो ओझाजी के अन्यान्य उपयोगी ग्रन्थ भी शीघ्र प्रकाशित किये जायँगे। यह पुस्तक नीचे लिखे पते पर १) मूल्य में प्राप्त होगी।

पं० श्री सूर्यनारायण आचार्य,
पुरानी बस्ती, बड़ का कुआ
जयपुरसिटी।

# ॥ भूमिका ॥

कर्मभूमित्वेन शास्त्रेषु वर्णितेऽस्मिन्नस्माकं भारते वर्षे सृष्टिकालादारभ्यैव धर्मस्य प्राधान्यमस्ति। धर्मश्च सोपपत्तिकोऽपि सूक्ष्मोपपत्तिकत्वाद् दुर्ज्ञेय इति तन्निर्णयार्थं श्रुति-स्मृति-सदाचारानेव मूलत्वेन समाश्रयन्ते श्रद्धालवो भारतीयाः। परं श्रुतयः स्मृतयश्चापि देशकालपात्रभेदेन विभिन्नान् धर्मान् प्रतिपादयन्त्यो दृश्यन्ते। ततश्च 'केन, कदा को धर्मपक्ष आश्रयितव्य' इति विशेषज्ञानार्थं तेषु तेषु धर्मविषयेषु तत्तद्विद्वन्निर्मिता विविधा व्यवस्थापकग्रन्था अपि समवलोक्यन्ते। यद्यपि ते सर्वेऽपि ग्रन्थाः श्रुतिस्मृतिमूलकत्वात्, समुचितप्रकारेण शास्त्रीयवचनानां व्यवस्थाकारकत्वाच्च धर्मनिर्णयविषयेऽत्यन्तं प्रमाणभूतास्तथापि तेषु खण्डनमण्डनात्मकदुरूहतर्कस्य समाश्रितत्वेन न तेभ्यः सुखेन धर्मविषयनिर्णयं कर्तुं प्रभवेत्साधारणो विद्वानिति धर्मतत्त्वं जिज्ञासमानानां लोकानां सुखावबोधार्थं विद्यावाचस्पतिश्रीमधुसूदनशर्ममहाशयैरनेके धर्मविषयका ग्रन्था निर्मिता निर्मीयन्ते च। तेष्वन्यतमेयमाशौच-पञ्जिकाऽद्य विद्वज्जनानां सेवायां समुपस्थाप्यते। एतस्यामाशौचविषये संभावितानां सर्वेषां भेदानां, संबन्धभेदेन भिन्नतामुपगच्छतोऽशौचकालस्य च विनिर्णयस्तु प्राचीनग्रन्थानामाधारेण शास्त्रार्थांशं परित्यज्य सिद्धान्तमात्रशोधनेन सरलतया क्रमबद्धतया च कृत एव, परं वर्तमानकाले तर्केण धर्मतत्त्वं बुभुत्सूनां नूतनपरिपाटीपरिष्कृतचेतसां लोकानां संदेहविनिवृत्तिपूर्वकमशौचोपपत्तिपरिज्ञानार्थमपि कृतः प्रयत्नः। अर्थादेतस्यां 'किं नामाशौचम्? कुतस्तत्संभवः? कस्माच्च संबन्धभेदेन तत्र तारतम्यम्? इत्यादयो विषया अपि सर्वसामान्येन युक्तिवादेन, शास्त्रीयप्रमाणप्रदर्शनेन, धर्मशास्त्रीयव्यवस्थाग्रन्थानां संयोजनेन च सम्यक्तया विवेचिताः। समुचितान् कोष्ठान् विरचय्य तद्द्वारा सापिण्ड्यादयः सूक्ष्मा विषयास्तथा स्पष्टीकृताः, यथा साधारणप्रज्ञोऽपि जनो विनैव विशेषाऽऽयासेन तांस्तान् विषयान् याथार्थ्येन बोद्धुं प्रभवेत्। किमत्र बहुनोक्तेन, विद्वांसो जनाः स्वयमेव ग्रन्थमेनमालोक्यास्योपयोगितां विनिश्चिन्युयुः। अस्माकं मतेन, विद्यावाचस्पतिमहोदयैर्लोकोपकारबुद्ध्या विनिर्मितोऽयं ग्रन्थ आशौचविषयेऽद्वितीयः परमोपयोगी चेति सर्वेऽपि धर्मनिर्णयकाङ्क्षिण आशौचतत्त्वपरिज्ञानार्थं ग्रन्थमेतमुपयुञ्जीरन्निति सुदृढमाशास्महे।

निवेदकः

प्रकाशकः

श्रीः ।

# विषयसूची

| अध्याय-संख्या | अधिकार-संख्या | विषयाः | पृष्ठ-संख्या |
|---|---|---|---|

॥ इति ॥



| | | | |
|---|---|---|---|
| ३८ | २४ | पञ्चहुति- | पञ्चाहुति- |
| ३९ | १० | पः संबंधः | यः संबन्धः |
| ३९ | १० | सम्बधेन | संबन्धेन |
| ३९ | १३ | ता तम्येन | तारतम्येन |
| ४० | २ | पत्र | यत्र |
| ४० | २१ | चापद्यते | चापैदते |
| ४२ | १८ | वृद्धाशौचं | वृद्धयाशौचं |
| ४२ | २५ | सप्तामादिषु | सप्तमादिषु |
| ४३ | २ | तृतीयमधि | तृतीयमासेषु |
| ४३ | ७ | मासे | मासेषु |

४३ पृष्ठान्ते प्रमादात्परित्यक्तोऽयं पाठोऽधिकः पाठ्यः—

'इदं त्वत्र बोध्यम् । द्विविधं तावत् चातुर्वर्ण्यस्य पूर्णाशौचंव्याख्यास्यामः—'शुद्धयेद्विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति' इत्येवं प्रतिवर्णनियताशौचं प्रातिस्विकमेकम् । "सर्वे वा स्युर्दशाहिनः" इत्येवं प्रत्याकृष्टाशौचं द्वितीयम् । तत्र येषां प्रातिस्विकाशौचं कुलाम्नायरिहूं दृष्टं तेषामेव क्षत्रियवैश्यशूद्राणामिहापि गर्भस्राव-गर्भपातयोरुक्तरीत्या प्रातिस्विकाशौचं विधीयते । अथ येषां प्रत्याकृष्टाशौचिनां दशाहाशौचमेव 'पूर्णाशौचंकुलाचारप्राप्तंभवेत्, तेषामिहापि स्रावपातयोर्ब्राह्मणवदेवाशौचं नेयम् । पूर्णाशौचानुसारेणैवेहाप्याशौचप्रत्याकर्षात् ।

| | | | |
|---|---|---|---|
| ४४ | ८ | निकृष्टशूद्रायाः | सामान्यतस्तु शूद्रायाः |
| ४४ | १४ | (कोष्ठे) प्रत्यन्तस्त्रीणाम् | असच्छूद्रस्त्रीणाम् |
| ४६ | ५ | परपूर्वायाः | परपूर्वायाः भार्यायाः |

४६ पृष्ठे प्रकोष्ठके द्वितीये कोष्ठे 'स्पर्शाशौचम्' इति शीर्षके 'कन्याप्रसवे' इत्यादि पञ्चमाद्यासु पञ्चसु पङ्क्तिषु सचैलस्नानानुवृत्तिसूचकं ,, चिन्हं प्रमादात्पतितम्, न तत्रोचितम् ।

| | | | |
|---|---|---|---|
| ४७ | १९ | स्ना— | स्नान— |
| ४८ | १२ | स्याद्यस्य | स्याघस्य |
| ४८ | १७ | निमित्ताना— | निमित्तिना |

| | | | |
|---|---|---|---|
| ४८ | २३ | अग्निरसाङ्कौर्वी (१९६१) | नगरसांङ्कौर्वी (१९६७) |
| ५० | ६ | पद्– | पद्ध |
| ५० | १० | व्रतयन्धान्तम् । | घृतयन्धान्तं वा नयाहम्। |
| ५० | १३ | चतुर्विशमास– | चतुर्विंशमास– |
| ५[illegible] | १५ | ( कोष्ठि ) ७६ | ७६– |
| ५५ | १९ | स्कन्धनानां | स्कन्धानानां |
| ५७ | २ | गायत्र्यं | गायत्र्या |
| ५७ | २ | त्रिष्टभा | त्रिष्टुभा |
| ५७ | ८ | ब्राह्मादिवर्णा– | तस्मादेवं ब्राह्मणादिवर्णां– |
| ५७ | १५ | निरवांसिताः | निरवसिताः |
| ५७ | १६ | वान्त्यजात्यावसायि | वान्त्यजान्त्यावसायि |
| ५७ | १६ | भेद्यतुर्धा | भेदैश्चतुर्धा |
| ५८ | ८ | विशेषाशौच- | विशेदेषाशौच – |
| ५९ | २४ | घमात्रेय | वैमात्रेय |
| ६[illegible] | ८ | सवर्णानां | वर्णानां |
| ६० | ९ | धरणे | मरणे |
| ६१ | १ | तत्र । योनि- | तत्रयोनि– |
| ६१ | ४ | ३७ | ३ |
| ६१ | ११ | पैतृष्वस्रीय | पैतृष्वस्रीय |
| ६१ | ११ | पठ्यन्ते मातुलपुत्रस्येत्यधिकम् । | |
| ६१ | २४ | निर्गेण | निर्गुण |
| ६२ | ५ | चैतेत्रेधा | चैते त्रेधा |
| ६२ | [illegible] | पुत्री | पुत्रौ |
| ६२ | ७ | मातुश्वसुः | मातुःष्वसुः |
| ६२ | ९ | मातामहभगिनीपुत्र इत्यनन्तरं मातामही भगिनीपुत्र इत्यपि पाठ्यम् । | |
| ६२ | १६ | सपिण्डकुलागृहीतस्य | सपिण्डकुलाद्गृहीतस्य |
| ६४ | १० | यात्तेषां | यावत्तेषां |
| ६४ | १५ | नाभ्यासन | न्धिनाभ्यासन |

| | | | |
|---|---|---|---|
| ६४ | १६ | उपते | भज्यते |
| ६६ | ५ | कृच्छम् | कृच्छ्रम् |
| ६६ | ५ | दुपवासः | दुंपवासः |
| ६६ | २१ | स्नेहेन वा | स्नेहेनास्नेहेन वा |
| ७० | २४ | द्वितीये | तृतीये |

७१ पृष्ठे १० पङ्क्त्यनन्तरं पूर्वं 'तत्रादौ सजातीयाधिकरणमिति पठित्वा तदनन्तरं 'पूर्वाशौचप्रथमदिने' इत्यादि २०५ अङ्काङ्कितमधिकरणं पाठ्यम् ।

| | | | |
|---|---|---|---|
| ७२ | १० | सजातीये पूर्वोखण्डे | सजातीये खण्डे |
| ७२ | २२ | स्वप्रसवनित्त— | स्वप्रसवनिमित्त— |
| ७३ | १२ | क्रिया शौचाध्याये | क्रियाशौचाध्याये |
| ७३ | १६ | वहित्वा | वहनं कृत्वा |
| ७४ | ११ | त्र्यहादिपूर्वोत्सूतकपाते | त्र्यहादिशावे द्व्यहादिपूर्वोत्सूतकपाते |
| ७४ | २८ | पुत्रभार्योश्चासपिण्डा— | पुत्रभार्योश्च सपिण्डा— |
| ७६ | १६ | अन्त्यान्त्यरात्रे— | अथान्त्यरात्रे— |
| ७९ | ६-७ | निर्देशाहाधिकारः | निर्देशाधिकारः |
| ७९ | ७ | स्वदेशस्थपूर्वा | सदेशस्थपूर्वा |
| ७९ | १६ | पर्वाशौचे | पूर्वाशौचे |
| ८० | २८ | कान्यायाः | कन्यायाः |
| ८२ | २ | चत्वारित् | चत्वारिंशत् |

८३ पृष्ठे ११ पङ्क्त्यनन्तरः ८५ पृष्ठे १५ पङ्क्त्यन्तः पाठ, सदेशस्थपूर्वाशावाधिकाररूपः, अतिक्रान्ताध्यायसमाप्तिश्लोकात् पूर्वं ८३ पृष्ठस्य ६ पङ्क्त्यनन्तरं पाठ्यः ।

| | | | |
|---|---|---|---|
| ८३ | २३ | त्रिरात्रम् । पुत्रस्य | त्रिरात्रं पुत्रस्य |
| ८५ | २७ | स्वास्थ्यलाभा— | स्वास्थ्यालाभा— |
| ८६ | ८ | स्पर्शाच | स्पर्शाशौच |
| ८६ | २४ | आगृहीत— | प्रागृहीत— |
| ८७ | २४ | यादिश्रवण— | यथादिश्रवण— |

| | | | |
|---|---|---|---|
| ९० | १ | नकुर्याद्ध । | न कुर्याद्धा । |
| ९० | ७ | राजाद्वारसंधने | राजाद्वारसाधने |
| ९२ | २४ | दर्पकृते च मृत्युकृते च | दर्पकृते च |
| ९३ | २२ | प्राप्नगाय्यु चा | प्राप्नयाग्यु वा |
| ९३ | २३ | यत्रापवादा | तत्रापवादा |
| ११९ | १६ | कृत्यामारसमुच्चये | कृत्यसारसमुच्चये |
| १२८ | ६ | किं सत्यमिति किमसत्यं | किं सत्यं किमसत्य-मिति |
| १२८ | ९ | तथा विधानिव वचनान्यशभूय प्रस्तुतां स्त्वा | तथाविधानि च वचनान्प्रस्तुतां-यत्रभूयस्त्वा– |

१२८ पृष्ठस्य १४ पङ्क्त्यनन्तरं समाप्तिश्लोकात्पूर्वं पूर्वं १२९ पृष्ठमा-रभ्य लिखितानि निबन्धनामानि पाठ्यानि ।

| | | | |
|---|---|---|---|
| १२८ | १७ | पृथगिया कष्टायत्- | पृथगिधाकष्टायत्त |
| १२८ | २१ | विध्या हिसा | विधा हि सा |

यासु अर्थस्याप्रतिपत्तिसंभावना, अन्यथाप्रतिपत्तिसंभावना, वा, तथा-विधाएवकाश्चिद् शुद्धयोऽत्र शोधयित्वा निदर्शिताः । साधारणा–यन्त्रालय-सुलभाः पदच्छेद-विसर्ग-विन्दु-मात्रानुस्वार-त-द्व-व-बादि वर्णपरिवर्तनस्-खरच्युत्याद्या अन्या अप्यशुद्ध यस्तु विद्वद्भिरेव स्वयमूहित्वा संशोध्य पाठ्याः । अन्त्ये प्रमाणसंग्रहाध्याये स्मृतिवचनोपन्यासे त्वराधशादशुद्धि बाहुल्यं । तासमिति मूल पुस्तकेभ्य एव तत् संशोध्यम् । इह शुद्धि पत्रे सीसकाक्षर ( टाइप ) निर्मिता एव पङ्क्तयः पङ्क्ति संख्या परिगणिताः, शिलामुद्रिता यन्त्रकोष्ठाद्यास्तु संख्यातो बहिर्भूता एव । इति ।

---

। श्रीः ।

## शुद्धिसिद्धान्तपञ्जिकायाम् —

# आशौचपञ्जिका ।

---

१—श्रीमच्छिवकुमारस्य पादमूलं जगद्गुरोः ।
विज्ञानभाण्डागारस्य शीर्षं स्वान्ते सदा दधे ॥१॥

विद्यावाचस्पतिः श्रीमान् भट्टाचार्यमधुसूदनः ।
समीक्षाणकवर्तीमां करोत्याशौचपञ्जिकाम् ॥२॥

सन्ति यद्यपि भूयांसो निबन्धाः किन्तु तेऽखिलाः ।
स्मृतिव्याख्योच्छलत्तर्कजटिला दुर्गमाशयाः ॥३॥

तर्कनिर्णीतमर्थं ये जिघृक्षन्ति पृथक्कृतम् ।
येऽज्ञा मतिविस्मन्ते तेषामर्थेऽयमुद्यमः ॥४॥

निरीक्ष्य धर्मशास्त्राणि विमृश्य विमतानि च ।
तत्सारभूतः सिद्धान्तः सिद्धवत् त्विह दर्श्यते ॥५॥

अत्राध्यायाः परीभाषा सूत्रं जन्म मृतिः क्रिया ।
दोषः पातोऽतीतकालोऽपवादो वाक्यसंग्रहः ॥६॥

### १—शास्त्रसंग्रहः ।

२—अत्र ग्रन्थेऽध्यायाः । अध्याये चाधिकाराः । अधिकारे सिद्धान्ताः । सिद्धान्ते च तत्प्रसंगवचनिकाः—इत्येवं विषयपरिच्छेदा भवन्ति ॥ तत्राध्याया दश (१०) । अधिकाराश्चतुःषष्टिः (६४) । सिद्धान्तास्तु षट्षष्ट्यधिकानि त्रीणि शतानि (३६६) ॥

३—तत्र प्रथमे परिभाषाध्यायेऽशौचसम्बन्धिनो विज्ञातव्याः पारिभाषिकाः कतिचिदर्थाः पृथक्कृत्य प्रदर्शिताः ॥१॥ द्वितीये सूत्राध्याये त्वाशौचप्रभवस्थानसंक्रमणह्रासादिभिरर्थजातैराशौचरहस्यमुपपादितम् ॥२॥

तृतीये जन्माध्याये जन्माशौचविचारः ॥३॥ चतुर्थे मरणाध्याये मरणाशौचविचारः ॥४॥ पञ्चमे क्रियाध्याये शवानुगमनाद्यौर्ध्वदैहिकक्रियानिमित्तकाशौचविचारः ॥ ५ ॥ षष्ठे दोषाध्याये साधारणमालिन्यरूपाशौचोत्पादकाः केचन दोषा आख्याताः ॥ ६ ॥ सप्तमे पाताध्याये आशौचसंकरविचारः ॥७॥ अष्टमेऽतीतकालाध्याये आशौचमुख्यकालोल्लङ्घनादन्तिकान्तकालाशौचानि विदेशस्थमरणादिनिमित्तकानि दर्शितानि ॥ ८ ॥ नवमेऽपवादाध्यायेऽशौचोत्पत्तिप्रतिबन्धकस्थानान्युपदर्शितानि ॥ ९ ॥ दशमे तु वाक्यसंग्रहाध्याये आशौचविषयकाणि सर्वाण्यार्षप्रमाणवचनानि संगृह्य दर्शितानि । एवं यद्यद्ग्रन्थोल्लिखिततर्कप्रयोगविनिर्णीता आशौचसिद्धान्ता इह पञ्जिकायामुपनिबद्धास्तेषां ग्रन्थानां नामानि चेह प्रकाशितानि ॥१०॥ तदित्थं दशभिरध्यायैः सर्वे समीक्षिता आशौचविषयाः ॥

४—अथास्मिन् परिभाषाध्याये—शास्त्रसंग्रहः, प्रतिज्ञा, आशौचस्वरूपम्, आशौचविशेषाः, विशेषाश्चाः स्पर्शास्पर्शव्यवस्था, कर्तव्याकर्तव्यव्यवस्था, आरम्भहेतवः, आरम्भकालः, निवृत्तिहेतवः, शुद्धिशौरम् इत्येकादशाधिकाराः प्रदर्श्यन्ते इति शास्त्रसंग्रहाधिकारः ॥१॥

## २—प्रतिज्ञा ।

५—प्रतिशरीरमात्मानस्त्रयो भवन्ति—शरीरात्मा, अन्तरात्मा, विशुद्धात्मा च ॥ तत्रैतं शरीरात्मानमधिकृत्य दोषांस्ततो निवर्तयितुं गुणांस्तत्राधातुं चेदमायुर्वेदशास्त्रं यथा प्रवर्तते, तथैवेदं धर्मशास्त्रं तमन्यं सत्त्वाख्यमन्तरात्मानमधिकृत्य दोषांस्ततो निवर्तयितुं गुणांश्च तत्राधातुमविशेषात् प्रवर्तते । अन्तरात्मशरीरात्मनोरन्योन्यं घनिष्ठसंबन्धादेकत्र विकारप्राप्तौ परत्रापि विकारोपसंक्रमणादायुर्वेदशास्त्रेऽप्यन्तरात्मनः संस्कारो यथाऽपेक्ष्यते, तथैवेह धर्मशास्त्रेऽपि शुद्धिप्रकरणे भूयसाऽस्त्येव शरीरात्मनोऽपि संस्कारापेक्षा । यस्तु पुनरयं तृतीयो विशुद्धात्मा विविच्यते स खलु सर्वेषां मुख्योऽपि विभुत्वादक्रियत्वाच्च न करोति न लिप्यते—इत्यतः स इह धर्मशास्त्रे चायुर्वेदशास्त्रे च नाधिक्रियते । तस्य सर्वगुणोपपन्नत्वाद्दोषशून्यत्वाच्च संस्कारानपेक्षणादित्याहुः ॥

६—अथान्तरात्मनः सत्वाख्यस्य संस्कारविधानं धर्मशास्त्रम् । तत्र साक्षादन्तरात्मनः संस्कारस्य कर्तुमशक्यत्वादात्मायतनानां संस्कारेणात्मनः संस्कारः क्रियते स धर्मः, अभ्युदयसाधकत्वान्निःश्रेयससाधकत्वाच्च । भूतभौतिकविग्रहः, प्राणसमुदयश्चात्मायतनानि । तेषां दोषमार्जनं स्वस्त्ययनं गुणाधानं चेति त्रिविधाः संस्काराः संपाद्यन्ते । प्रज्ञापराधनिबन्धना आहारविहारादिद्वयहारोपनीतद्रव्याणां ये हीनयोग—मिथ्यायोगातियोगास्तज्जनिता ये नियमेनात्मायतनेषु सत्वेऽन्तरात्मनि चाशुभातिशयाः संचीयन्ते तानि मलानि, ते दोषाः । आत्मायतनानामात्मनश्च प्रसादसिद्धौ तेषां प्रतिबन्धकत्वात् ॥ तत्परिमार्जनं शुद्धिसंस्कारः स च मलानां पाञ्चविध्यात् पञ्चधा विभज्य शास्त्रे निरूप्यते—मलमूत्रादिशारीरशुद्धिः प्रथमा । शय्यासनस्थानवसनभोजनपात्रादिद्रव्यशुद्धिर्द्वितीया । सापिण्ड्यादिसम्बन्धसूत्रबद्धानां जननमरणादिनिमित्तजनिताघशुद्धिस्तृतीया । प्रज्ञापराधनिबन्धनचारित्र्यदोषजनितैनः शुद्धिश्चतुर्थी । रजस्तमोगुणाधिक्यप्रयुक्तपरिदुष्टभावशुद्धिः पञ्चमी । पञ्चभिरेतैः शुद्धिसंस्कारैः प्रक्षीणदोष सत्वात्मके शरीरात्मकेऽपि वा क्षेत्रे गुणाधानाय कृतो यत्नः फलवान् भवति, न त्वन्यथा । यज्ञतपोदानैस्त्रिविधैः कर्मभिर्य इह सत्वेऽन्तरात्मनि शुभातिशयाः संचीयन्ते तानि बलानि, ते गुणाः । आत्मायतनानामात्मनश्च प्रसादसिद्धौ तेषां प्रधानोपायत्वात् । तत्पर्याधानं दैवसंस्कारः । स्वस्त्ययनं तु दोषोत्पादकसामग्र्याः प्रतिबन्धेन स्वस्थस्यात्मनो निरुपद्रवमेकाकारतया स्थापनम् ॥ तत्र दैवसंस्कारः स्वस्त्ययनसंस्कारो वा शुद्धिसंस्कारमन्तरेण नोपयुज्येते—इत्यतः प्रथमं निरूपणीये शुद्धिसंस्कारे शारीरशुद्धि-द्रव्यशुद्धि-निरूपणानन्तरमिदानीमघशुद्धिर्निरूप्यते ॥ इति प्रतिज्ञाधिकारः ॥ २ ॥

## ३—आशौचस्वरूपम् ।

१—वेदबोधितचातुर्वर्ण्योचितकर्मफलसिद्धिप्रतिबन्धकोऽमेध्यत्वलक्षणो जननमरणादिजन्यापूर्वविशेषोऽघमित्याख्यायते । अघभिन्नमलसम्बन्धात् कस्यचिदेकव्यक्तिमात्रस्य देहमात्रं मलिनं भवति । अघात्मकमलसम्बन्धात्तु तत्कुलोत्पन्नानां सर्वेषां देहश्चात्मा चाशुचिर्भवतीति

विशेषः । अस्याघस्याशौचसंज्ञा शास्त्रे प्रसिद्धा । अशौचमाशौचं सूतकमघमित्यनर्थान्तरम् । तदपवादः शुद्धिः । तदुपायनिर्देश इह प्रकरणार्थः ।

८—आशौचमित्यशुचेर्भावः कर्म चेत्याहुः । अशुचित्वं चामेध्यत्वं कर्मानधिकारमात्रमित्याहुः । परे तु आशौचशब्देन कालस्नानाद्यपनोद्यः पिण्डदानोदकदानादिकर्माधिकारनिमित्तभूतोऽध्ययनादिकर्माधिकारप्रतिबन्धकीभूतः पुरुषगतः कश्चनातिशयः कथ्यते न तु कर्मानधिकारमात्रम् । स चातिशयोऽघशब्देन शास्त्रे प्रसिद्धः । वस्तुतस्तु संसर्गसंस्रवादिपरिशीलनाभ्यासात् संसर्गि पुरुषेष्वप्रतिबन्धं कश्चनातिशयः समुत्पद्यते । सत्यपि समाने संसर्गे योनिविद्याद्यभिसम्बन्धवत्सु पुरुषेषु सोऽतिशयोऽविलम्बितमुत्पद्यते । संसर्गोपरामप्रायत्वे तु तत् क्रमेण ह्रसित्वा चिरेण सर्वथा निवर्तते । आश्रमविशेषसम्बन्धाच्चित्तवैराग्यात् कारणान्तराद्वा संस्रवनिवृत्तिनिमित्तसन्निधाने त्वेकहेलयाऽसौ निवर्तते । तस्य चातिशयस्य कालभेदेन वैरूप्यं भवति । संसर्गिषि जीवति सत्यन्यथा । मृते किञ्चित्कालपर्यन्तमन्यथा । तदूर्ध्वं पुनरन्यथा । तत्र मध्यमावस्थायां सोऽतिशयोऽघशब्देन संज्ञायतेऽशौचशब्देन च । तस्य तादृगवस्था-निवृत्तिरेव शुद्धिः । तत्कारणोपन्यासश्चेह प्रकरणार्थः ॥ इत्याशौचस्वरूपाधिकारः ॥३॥

## ४-आशौचविशेषाः ॥

९—प्रधाननिमित्तानुरोधेनाशौचं द्वेधा-जन्माशौचं मरणाशौचं चेति । तयोः क्रमेण सूतकं शावमिति च संज्ञामाहुः । यत्तु मृताशौचेऽपि सूतकशब्दो दक्षादिभिर्व्यवहृतो दृश्यते तदुभयत्राघस्वरूपस्यैक्याभिप्रायेण निमित्तशब्दभेदानादरादौपचारिकं द्रष्टव्यम् ।

परे त्वाहुः । जन्ममृत्युक्रियादोषा आशौचे निमित्तानि, तेन निमित्तभेदादाशौचं चतुर्धा—जन्माशौचम् मरणाशौचम् उत्तरक्रियाशौचम् दोषाशौचं चेति । जातकस्य जन्मनि मातापित्रादिसम्बन्धिवर्गे कञ्चित्कालमशुद्धिर्जायते तज्जन्माशौचम् । एवं मृतकस्य मरणे मातापित्रादिसम्बन्धिवर्गे स्त्रीपुत्रादिसम्बन्धिवर्गे च कञ्चित्कालमशुद्धिर्जायते तन्मरणाशौचम् । तथा मृतकस्य मरणे ये केचिदौर्ध्वदेहिकं श्राद्धदाहादिकमुत्तरक्रियाख्यं

कुर्वन्ति तेषां तत्करणनिमित्तिकाऽशुद्धिः कञ्चित्कालमुपजायते तदुत्तरक्रियाशौचम् । अथ सन्ति बहवो दोषा मलिनीकरणास्तत्सम्बन्धादप्यशुद्धिर्जायते तद्दोषाशौचम् ।

१०—एते च जन्ममृत्युक्रियादोषाः स्वरूपसन्तो निमित्तानि भवन्ति ज्ञायमानाश्च । तेनाशौचं द्वेधा-स्वरूपसदाशौचम्, वासनाशौचं चेति ।

११—अथाधिष्ठानभेदादाशौचं त्रेधा । स्पर्शाशौचम्, कर्माशौचम्, मङ्गलाशौचं चेति । यत्र शरीरस्पर्शो निषिध्यते तत्स्पर्शाशौचम् । यत्र वैदिकानि कर्माणि निषिध्यन्ते तत्कर्माशौचम् । यत्र तु विवाहोपनयनकन्यादानादीनि मङ्गलकर्माणि गयाद्यपूर्वतीर्थयात्रादीनि च निषिध्यन्ते तन्मङ्गलाशौचम् । तत्राद्यं संस्कारात्मकमपूर्वं जायमानमिह भूतात्माधिष्ठितबहिःशरीरे समवतिष्ठत इत्यतः शरीराशौचमङ्गाशौचं च कथ्यते । शरीरस्पर्शे सति इदं परशरीरे संक्रमते तस्मात्स्पर्शप्रतिषेधलक्षणं स्पर्शाशौचं च कथ्यते । अथ द्वितीयं तदपूर्वं जायमानमिह क्षेत्रज्ञात्माधिष्ठितान्तःशरीरे समवतिष्ठते इत्यतस्तदात्माशौचं प्राणाशौचं च कथ्यते । तत्र सति स्वाध्यायो दानप्रतिग्रहौ देवकर्माणि प्रेतपिण्डक्रियावर्जं पितृकर्माणि च प्रतिषिध्यन्ते । अतः श्रौतस्मार्तकर्मप्रतिषेधलक्षणं कर्माशौचं च कथ्यते । चर्मशरीरे तस्याचस्यानवस्थानात् ।

अथ तृतीयमाभ्युदयिकमङ्गलकर्मप्रतिषेधलक्षणं त्वशौचमतिमात्रसापिण्डयवति पुत्रे सत्वमात्राधिष्ठितमनुशयरूपं भवतीत्यतस्तदनुशयाशौचं प्रेताशौचं च कथ्यते । सपिण्डीकरणोत्तरं प्रेतत्वं विमुच्यते । तच्च संवत्सरान्ते विहितमतस्तद्वर्षाशौचं च कथ्यते ॥ * ॥ इत्याशौचविशेषाः ॥ ४ ॥

## ५—विशेषाश्रयाः ।

१२—जन्मनि सूत्यां सूतीसपत्न्यां सूतीभर्तरि च स्पर्शाशौचं कर्माशौचं चोत्पद्यते । इतरेषां सपिण्डानान्तु कर्माशौचमात्रं न स्पर्शाशौचम् ॥ अथ संसर्गिणि स्पर्शाशौचमात्रं न तु कर्माशौचम् । तृतीयाशौचं तु जन्मनि कस्यापि नास्ति । मरणे तु पुत्रे त्रिविधमशौचमुत्पद्यते । सपिण्डादौ तु द्विविधम्—स्पर्शाशौचं कर्माशौचं च । संसर्गिणि त्वेकं स्पर्शाशौचमात्रं न तु

कर्माशौचम् ॥+॥ निर्हाराद्युत्तरक्रियायां स्पर्शाशौचं कर्माशौचं चेति द्विविधाशौचसम्बन्धः। दोषविशेषाभिसन्धाने तु कर्माशौचमात्रं न स्पर्शाशौचं तृतीयाशौचं वा । तदित्थं जन्ममृत्युक्रियादोषनिबन्धनेष्वाशौचेषु स्पर्शकर्मोत्सवप्रतिषेधलक्षणान्युपदर्शितानि ॥+॥ इत्याशौचविशेषाश्रयविचारः ॥५॥

## ६—स्पर्शास्पर्शव्यवस्था ।

१३—कर्माशौचं कर्मप्रतिषेधलक्षणमधिककालेनापैति, स्पर्शाशौचं त्वस्पृश्यत्वलक्षणमल्पकालेन । तत्रासति विशेषाभिधाने कर्माशौचं यत्र यावदुक्तं तस्य प्रथमे तृतीयांशे स्पर्शाशौचमपि मातरि पितरि भ्रातरि तदन्येषु च सपिण्डेषु यथायथं समुच्चीयते । यथा मासे कर्माशौचे दशाहं स्पर्शाशौचम् । दशाहे तु कर्माशौचे त्र्यहं स्पर्शाशौचम् । त्र्यहे कर्माशौचे त्वेकाहं स्पर्शाशौचम् । ततो न्यूने कर्माशौचे स्नानात्प्राक् स्पर्शाशौचम् । इत्येवं तारतम्येन सर्वत्रोह्यम् । अयमेव च तृतीयांशः सति सम्भवे अस्थिसंचयनकालो भवति ॥ अत एवास्थिसंचयनदिने सर्वस्यास्पृश्यता निवर्तते । स च पूर्णाशौचेऽस्थिसंचयनकालो ब्राह्मणस्य चतुर्थाहः । क्षत्रियस्य पञ्चमाहः । वैश्यस्य षष्ठाहः । शूद्रस्य दशमाहः । त्र्यहाशौचे तु सर्वेषां द्वितीयाहः । अन्यत्राप्येवं सर्वत्रासति विशेषाभिधाने कर्माशौचत्रिभागकालेनास्पृश्यतानिवृत्तिरित्याह देवल ऋषिः । अतिक्रान्ताशौचे तु सचैलस्नानमात्रेणास्पृश्यतानिवृत्तिः । इति मरणाशौचविषयकः स्पर्शास्पर्शकालः ॥ १ ॥

१४—जननाशौचे तु पुत्रजनने कन्याजनने वा शरीराशौचमस्पृश्यत्वलक्षणमेकस्याः सूतिकाया एव सम्पूर्णं दशरात्रकालापनेयं भवति । अथ पितुर्विमातॄणां च तदत्यल्पं पुत्रजनने स्नानमात्रापनेयं भवति । कन्याजनने तु पितुर्विमातॄणां च तावन्मात्रमपि नास्ति । मातापितृभिन्नानां तु सपिण्डानां पुत्रजनने कन्याजनने वा कुत्राप्यस्पृश्यत्वं नास्ति ॥ २ ॥

१५—सूतिकास्पर्शे तु कृते स्पर्शनिमित्तकमस्पृश्यत्वप्रयोजकमघमनुवर्तते। तच्च सूतिकाभर्तरि दशरात्रकालापनेयम् । सपिण्डादिषु तु स्नानमात्रापनेयमिति विशेषः ॥ इति स्पर्शास्पर्शविचारः ॥ ६ ॥

## ७—कर्त्तव्याकर्त्तव्यव्यवस्था ।

१६—मरणाशौचे जननाशौचे वा सन्ध्योपासनं पञ्चमहायज्ञान् षट् कर्माणि च वर्जयेत् । तत्राचमनम् प्राणायामाः, आचमनम् मार्जनम्, आचमनम् सूर्य्यार्घ्यदानम्, सूर्य्योपस्थानम्, गायत्रीजपश्चेत्येतानि सन्ध्यावन्दनस्वरूपसम्पादकान्यष्टौ कर्माणि गृहस्थानां नित्यानि । तानि च सर्वाण्यप्याशौचकालमध्ये प्रतिषिद्धानि ॥+॥ पञ्चैव महायज्ञाः—भूतयज्ञो मनुष्ययज्ञः पितृयज्ञो देवयज्ञो ब्रह्मयज्ञ इति ॥ तेऽप्याशौच कालमध्ये प्रतिषिद्धाः ॥+॥ यजनं याजनमध्यापनमध्ययनं दानं प्रतिग्रहश्चेत्येतानि षट् कर्माणि गृहस्थानां नित्यानि । तान्यपि सर्वाण्याशौचकालमध्ये प्रतिषिद्धानि—इत्येके ॥+॥

१७—परे त्वाहुः । आशौचे सति सन्ध्योपासनार्थमाचमनं सूर्योपस्थानं च न कुर्यात् । ५ । प्राणायामं तु न कुर्याद्वा विना मंत्रेण कुर्याद्वा । मार्जनं गायत्रीजपं च न कुर्याद्वा मानसमन्त्रेण कुर्याद्वा । सूर्यार्घ्यदानं तु गायत्रीं सम्यगुच्चार्य कुर्यादेव, नत्वेव न कुर्यादिति दाक्षिणात्याः । गौडास्तु सूर्यार्घ्यदानमपि नैव कुर्यादित्याहुः । प्रदक्षिणं कृत्वा सूर्यं ध्यायन् नमस्कुर्यात् । सैषा कुशवारिविवर्जिता मानसी सन्ध्या न कदाचित् परित्याज्या—इति सन्ध्यावन्दने विशेषः ॥ २ ॥+॥

१८—महायज्ञेषु वेदाध्ययनं वेदाध्यापनं च ब्रह्मयज्ञः । तमाशौचे सति नैव कुर्य्यात् । अथपिण्डदानमुदकदानं च पितृयज्ञः । पिण्डदानं श्राद्धशब्देनाख्यायते । उदकदानं तु तर्पणशब्देन । तत्राभ्युदयिकश्राद्धं जननाशौचे सत्यपि कुर्यादेव । अथ मृताहमारभ्य दशाहपर्य्यन्तं दशगात्रश्राद्धं तथाद्यश्राद्धमारभ्य सपिण्डीकरणान्तं षोडशश्राद्धं चेत्येतद्द्वयं मरणाशौचमध्ये कर्तव्यतया नियतत्वादशौचेऽपि कुर्यादेव । सपिण्डीकरणोत्तरं हि श्राद्धकर्ता पुत्रादिरशौचेन विमुच्यते न ततः प्राक् । त्रिविधं हि मातापितृमरणे पुत्रस्याशौचं प्रवर्तते दशाहव्याप्यं द्वादशाहव्याप्यं संवत्सरव्याप्यं च । तत्राद्यं दशम्या रात्रेरवसाने दशगात्रकर्मावसाने च निवर्तते । द्वितीयं द्वादश्या रात्रेरवसाने सपिण्डीकरणावसाने च । तृतीयं तु चान्द्रसंवत्सरान्ते । अथ

सपिण्डज्ञातीनां द्विविधमाशौचं भवति। त्र्यहव्याप्यं दशाहव्याप्यं च। तत्राद्यं तृतीयरात्रेरवसानेऽस्थिसंचयनकर्मावसाने च निवर्तते । द्वितीयन्तु दशम्या रात्रेरवसाने दशगात्रकर्मावसाने चेति। तत्राशौचनिवर्तकानां कर्मणामाशौचे कर्तव्यता नाप्राप्तेति न प्रतिषिध्यन्ते तत्र तानि कर्माणि किन्तु यद्येषामपि कर्मणां कर्तव्यदिने किञ्चिदशौचान्तरं प्रसज्यते तदा तदशौचे व्यतीते तच्छ्राद्धं कुर्यात्। न त्वाशौचकालमध्ये इत्याह ऋष्यशृङ्ग ऋषिः। एवं सांवत्सरिकश्राद्धदिनेऽप्याशौचप्राप्तौ तदशौचान्तद्वितीयदिने कुर्यात् न त्वाशौचकालमध्ये । अथाशौचान्तद्वितीयदिने मलमासादिकालदोषप्राप्तौ विघ्नान्तरप्राप्तौ वा तदुत्तरं प्रथमोपस्थितायां कृष्णैकादश्याममावास्यायां वा श्रवणादिवसे वा कुर्यादिति लघुहारीतः प्रचेताश्च । अमावास्यादिश्राद्धजातं तु नाशौचे कुर्यात्। यद्यावश्यकं स्यात्तदाशौचोत्तरं कृष्णैकादश्यां कार्य्यमिति शिष्टाः ॥ + ॥ इति पितृयज्ञे विशेषः ॥ ४ ॥

२०—अथ यजनं याजनं च देवयज्ञः। तत्र याजनं सत्याशौचे नैव कुर्यात्। होमस्तु यजनम्। तत्र नियमानियमानुरोधेन व्यवस्था। तथाहि—येषां बह्वृचादीनां दशरात्रमहोमेऽपि नाग्निविच्छेदः कल्पेऽभ्युपगम्यते तैरशौचे प्राप्तेऽग्निहोत्रहोमो न कार्यः। अशौचोत्तरं तु तत्रैवाग्नौ होमसिद्धिर्न तु पुनराधानाद्यावश्यकता । अथ तैत्तिरीयादीनां चतूरात्रमहूयमानोऽग्निर्लौकिकः सम्पद्यते। तस्मात्तेषां होमस्यावश्यकत्वादशौचकालेऽपि शुष्कान्नेन फलादिना वा ब्राह्मणद्वारा होमं कारयेत्। एवं स्मार्तहोमेऽपि कर्तव्यता नियतेसत्याशौचप्राप्तौ स्वयमकृत्वा परद्वारेणाकृतान्नं कृताकृतान्नं वा हावयेत्। कृतान्नं तु परद्वारापि न हावयेत् । ओदनसक्तुलाजमोदकलड्डुकादीनि कृतान्नानि ।-तण्डुलमाषमुद्गादीनि कृताकृतान्नानि, व्रीहियवगोधूमादीनि त्वकृतान्नानि। स्मार्तं वैधस्नानं नित्यदेवार्चनं च यजनम् । तदाशौचे न कुर्यात्। आगमोक्तं काम्यपूजनानुष्ठानादिकं निष्कामपूजनादिकं च यजनमुच्यते तत्रापि काम्ये संकल्प्य प्रवृत्ते यद्याशौची स्यात् तदा मानस्या प्रक्रियया ध्यानयोगेन तत्कुर्यात् न मन्त्रमुच्चारयेत्। निष्कामनियमे त्वाशौचेऽपि तत्कार्यम्। नियमाभावे त्वाशौचे तदुभयं न कुर्यात्। आशौचे निवृत्ते सति पुनः कुर्यादिति देवयज्ञे विशेषः ॥ ५ ॥

२१ अथ दानं प्रतिग्रहश्चेत्युभयं भूतयज्ञः । दीयमानं द्रव्यं बलिशब्देनाख्यायते तद्दानं तद्ग्रहणं च भूतयज्ञः । तत्र पुत्रजन्मनि नाडीच्छेदात् पूर्वं हिरण्य-भूमि-चतुष्पद-धान्य-गुड़-तिल-घृत- वस्त्र-तुरग-रथ-च्छत्र-च्छाग-मत्स्य-शयनासन-गृहादिद्रव्याणां दाने वा प्रतिग्रहे वा दातुः प्रतिग्रहीतुश्च दोषो नास्तीति कूर्मब्रह्मपुराणयोः प्रतिपाद्यते । लवणमधुमांसानां पुष्पमूलफलशाकानां काष्ठलोष्टतृणपर्णानां दधिदुग्धघृततैलानामजिनौषधयोः सक्तुलाज-मोदक-तण्डुलादिशुष्कान्नानामशौचिस्वामिकानामपि तत्स्वाम्यनुमत्या स्वहस्तेन ग्रहणे नास्ति दोषः । अशौचिना वा गृह्यमाणे दातुः प्रतिग्रहीतुर्वा न दोष इति ब्रह्मपुराणम् । यद्यपि बलिरिति वैधं कर्म भवति तथापीह वैधमवैधं वा सर्वविधं व्याख्यातमविशेषात् । एतदन्यस्तु सर्वो भूतयज्ञः सत्यशौचे प्रतिषिद्धः ॥ इति भूतयज्ञे विशेषः ॥ ६ ॥

२२-अथ गृहे समागतानां भोजनदानाश्रयदानाद्यातिथ्यकरणं मनुष्ययज्ञः। तत्र जनने मरणे चाशौचिनां कुलस्यान्नमशौचकाले न भोक्तव्यम् । अशौचिगृहे कृतभोजनस्याशौचं प्राप्नोतीत्यतस्तत्प्रतिषिध्यते । अशौचं ग्रहीतुमिच्छतान्त्वाशौचिकुलान्नभोजनेऽपि दोषो नास्ति । तदित्थं श्रौतेन सहायज्ञेन स्मार्तान्यपि षट्कर्माणि व्याख्यातानि ॥+॥ ७ ॥

२३—अथ त्रिविधमाशौचं पूर्वमाख्यातं स्पर्शाशौचं, कर्माशौचं, मङ्गलाशौचं चेति। तत्र श्राद्धकर्तुः पुत्रस्य दशरात्रं,सपिण्डानां तु त्रिरात्रं स्पर्शाशौचकालः । तत्राशौचिना शुचिना स्थेयम् । पराङ्गस्पर्शादिकमशुचिस्पर्शस्तैलाभ्यङ्गादिकं च न कार्य्यम् । अथ कर्माशौचं दशरात्रं, केषांचित्तु त्रिरात्रम् । तत्र—

"तैलाभ्यङ्गे बान्धवानामङ्गसंवाहनं च यत् ।
तेन चाप्यायते जन्तुर्यच्चाश्नन्ति स्वबान्धवाः "

इति मार्कण्डेयपुराणोक्तं कार्यम् । "मत्स्यमांसादि न भक्षयेयुराप्रदानाद्" इति भगवान् गौतमः प्राह । अयं च मांसादिभक्षणनिषेधोऽशौचाभ्यन्तरेऽशौचिमात्रसाधारणः ॥ अथ तृतीयमाशौचं संवत्सरेणापैतीति संवत्स-

रपर्यन्तं पुत्री विवाहोपनयनकन्यादानादीनि मङ्गलकर्माणि तीर्थयात्रां गयाश्राद्धं च न कुर्यात् । इति कर्तव्याकर्तव्यविचारः ॥ ७ ॥

## ८—आशौचारम्भहेतवः ।

२४-जन्माशौचं जन्मकालात्, नालच्छेदकालात्, जन्मश्रवणकालाद्वा प्रवर्तते । तत्र जननस्याशौचे निमित्तत्वाज्जन्मकालादेवारभ्याशौचप्रवृत्तिरिति दाक्षिणात्याः । नालच्छेदस्यैवाशौचे निमित्तत्वात्तदूर्ध्वमेवाशौचप्रवृत्तिर्न तु पूर्वमितिगौडाः । नालच्छेदो नाडीच्छेदो नाभिच्छेदः इत्येकार्थाः ॥ १ ॥

२५-मरणाशौचं तु मृत्युकालात्, दाहकालात्, मृत्युश्रवणकालाद्वा प्रवर्तते । तत्रानाहिताग्नेर्मृत्युकालादारभ्याशौचदिनगणना कार्या । न तु दाहादारभ्य। तेषां मरणस्याशौचे निमित्तत्वात् । आहिताग्नेस्तु दाहकालादारभ्यदिनगणना कार्या । न तु मृत्युकालात् । तेषां दाहस्याशौचे निमित्तत्वात् । इष्टिमतामन्त्येष्टिनिमित्ताशौचसम्बन्धेऽपि मृत्युनिमित्ताशौचस्य तत्राप्रवृत्तेः ॥ २ ॥

२६—एतच्च वस्तुसदाशौचप्रवृत्तौ निमित्तमुक्तम् । आशौचनिमित्तकविधिनिषेधव्यवहारप्रवृत्तौ तु जनने मरणे वा श्रवणकालादारभ्यैव गणना भवति तेन ततः पूर्वं स्पर्शकरणे कर्मकरणे वा न दोषः । ज्ञानस्यैव व्यवहारे निमित्तत्वात् । ३ । इत्याशौचारम्भहेतवः ॥ ८ ॥

## ९—आशौचारम्भकालः ।

२७—आशौचमारम्भकालसम्बन्धेन मतत्रयं स्मर्यते। तथाहि-सूर्योदयात् प्राक्कालपर्यन्तं रात्रौ जनने मरणे दाहे वा पूर्वदिनादारभ्य गणना कार्या सूर्योदयोत्तरं तूत्तरदिनादारभ्य । इत्येकं मतम् । १ ।

द्विविभक्ताया रात्रेर्निशीथकालपर्यन्तं रात्रौ जनने मरणे दाहे वा पूर्वदिनादारभ्य गणना कार्या निशीथोत्तरं तूत्तरदिनादारभ्य । इति द्वितीयं मतम् ॥ २

त्रिविभक्ताया रात्रेः प्रथमभागद्वयपर्यन्तं रात्रौ जनने मरणे दाहे वा पूर्वदिनादारभ्य गणना कार्या तृतीयभागे तूत्तरदिनादारभ्य । इति तृतीयं मतम् । ३ ।

२८—तत्र मिथिलादिपौरस्त्यदेशेषु सूर्योदयविभागव्यवस्था । मत्स्यादिपाश्चात्यदेशेषु निशीथविभागव्यवस्था । महाराष्ट्रादिदाक्षिणात्यदेशेषु तु त्रिभागव्यवस्था । तदित्थं यत्र देशे य आचारस्तत्र स तथा कार्यो नान्यत्र देशे । इत्यारम्भकालाधिकारः ॥ ९ ॥

## १०—आशौचनिवृत्तिहेतुविचारः ।

ज्ञानं तपोऽग्निराहारो मृन्मनो वार्य्युपाञ्जनम् ।
वायुः कर्मार्ककालौ च शुद्धिकर्तॄणि देहिनाम् ॥

२९—इत्येवं द्वादशैते शुद्धिहेतवो विष्णवादिभिराम्नायन्ते । तत्र ज्ञानतपसी अग्निमनसी कर्मकालौ वारि चेति सप्ताशौचनिवृत्तिहेतवो द्रष्टव्याः । तत्र तावज्ज्ञानतपोऽग्निमनसां प्रभावादेव तत्तदधिष्ठाने समुत्पद्यमानमिदमाशौचं पात्रभेदान्न्यूनाधिककालेन निवर्तते । तदित्थं स्थितिकालानुरोधेनेदमाशौचं द्वादशधा-अनाशौचं, सद्यःशौचम, एकाहः, द्व्यहः, त्र्यहः, चतुरहः, षडहः, दशाहः, द्वादशाहः, पञ्चदशाहः, मासः, मरणान्तं चेति । तत्र यः साङ्गं सकल्पं सरहस्यं च सर्वशाखं वेदमर्थतः सम्यग् विजानाति, अग्निमान् क्रियावांश्च भवति तस्याशौचं नास्ति १ । राज्ञामृत्विजां दीक्षितानां व्रतिनां सत्रिणां बालानां देशान्तरस्थानां च सद्यःशौचम् । २ । साङ्गवेदविदामग्निमतां क्रियावतां च ब्राह्मणानामेकाहः।३। अन्येषां च तथाविधानां द्व्यहः । ४ । वेदेनाग्निना क्रियया च यथा कथञ्चिद्धीनानां त्र्यहः । ५ । हीनतराणां चतुरहः । ६ । अब्राह्मणानां तथाविधानां षडहः । ७ । जातिमात्रेण विप्राणां तु दशाहः । ८ । क्षत्रियाणां द्वादशाहः ।९। वैश्यानां पञ्चदशाहः ।१०। शूद्राणां मासः ।११। अस्नात्वा, अनाचम्य, अजप्त्वा अदत्वा, अहुत्वा तु भुञ्जानानां मरणान्तम् । तथा व्याधितस्य कदर्यस्य सर्वदा ऋणग्रस्तस्य क्रियाहीनस्य मूर्खस्य विशेषतः स्त्रीजितस्य व्यसनासक्तचित्तस्य नित्यशः पराधीनस्य श्रद्धात्यागविहीनस्य च सर्वस्य भस्मान्तं सूतकं भवति ।१२। अत्र विशेषोऽपवादाध्याये वक्ष्यते ॥१॥

३०-अथ यद्यप्यधिष्ठानभेदात् त्रिविधमाशौचमाख्यातं तेषामपि तारतम्येन निवृत्तिकाला भवन्ति तथाहि-श्राद्धकर्तुः पुत्रस्य तत्संसर्गिणश्च दश-

गात्रोत्तरं दशाहान्ते स्पर्शाशौचनिवृत्तिः । सपिण्डीकरणोत्तरं वर्षान्ते द्वादशाहान्ते वा कर्माशौचनिवृत्तिः । वर्षान्ते च मङ्गलाशौचनिवृत्तिः । अथ ज्ञातीनान्तु सपिण्डानां तत्संसर्गिणां चास्थिसंचयनोत्तरं त्रिरात्रान्ते स्पर्शाशौचनिवृत्तिः । दशगात्रोत्तरं दशरात्रान्ते कर्माशौचनिवृत्तिः । मङ्गलाशौचं तु तेषां नास्ति ॥२॥ तदित्थं कालः कर्म चेत्युभयमाशौचनिवर्तकं सिद्धम् । तत्र काल एवाशौचनिवृत्तौ मुख्यो हेतुः, कर्म गौणमित्येके । कर्मैव तत्र मुख्यो हेतुः, कालो गौण इत्यन्ये । परे त्वाहुः-दशमदिवसे दशगात्रकर्मसमाप्तावपि दशम्या रात्रेरवसानपर्यन्तमशौचं न निवर्तते । येऽपि वा दशगात्रादिकं किमपि कर्म न कुर्वन्ति, तेषामपीदृशमशौचं स्वे स्वे कालेऽतीते निवर्तते । यथा संवत्सरादूर्ध्वं मरणश्रवणे कर्मकरणाभावेऽप्यशौचनिवृत्तिं मन्वादयः प्राहुः । तस्मात् काल एवाशौचनिवर्तको न तु कर्मकलापः । तस्य फलान्तरोद्देशेन विधानात् इति । केचित्तु श्राद्धादिशुद्धिकर्म निवर्तनीयमशौचान्तरमिच्छन्ति । तेषां तादृशाशौचनिवृत्तौ कर्मैव हेतुः, न कालः । तदन्याशौचनिवृत्तौ तु काल एव हेतुर्न कर्मेति विशेषः ॥३॥+॥

३१-अथाशौचं द्वेधा-वस्तुसदाशौचं, वासनाशौचं चेति । तत्र ज्ञाने सत्यसति वा निमित्तवशादुपजायमानमाशौचं यत्र सम्बन्धसूत्रादुत्पद्यते तदाद्यम् । यत्तु निमित्तश्रवणादशौचमुपजायते तद्द्वितीयम् । तत्र वस्तुसदाशौचं स्वेस्वे नियते कालेऽतीते स्वयं निवर्तते । ज्ञायमानं तु वासनाशौचं वस्तुसदाशौचस्थितिकालसन्निकर्षविप्रकर्षानुरोधान्न्यूनाधिकमात्रमुत्पद्य न्यूनाधिककालेनैव निवर्तते । यथा अन्तर्दशाहे श्रवणे शेषदिवसैर्निवृत्तिः । निर्दशस्य वर्षाभ्यन्तरं श्रवणे त्रिरात्रान्निवृत्तिः । वर्षादूर्ध्वन्तु श्रवणे स्नानमात्रान्निवृत्तिः । इत्येवं सर्वत्रोह्यम् ॥+॥ इत्याशौचनिवृत्तिहेतवः ॥१०॥

## ११—शुद्धिक्षौरम् ।

३२—आशौचोपक्रमदिने क्षौरं कार्यमिति दाक्षिणात्याः । तत्रापि दाहात् प्रागेव श्राद्धकर्त्रा, दाहादूर्ध्वन्तु सपिण्डादिभिरित्याहुः । आशौ-

चावसानदिने क्षौरं कार्यमिति गौडाः ।

"समाप्य दशमं पिण्डं यथाशास्त्र- मुदाहृतम् ।
श्मश्रुकेशनखानां च यत् त्याज्यं तज्जहात्यपि ॥"

इति ब्रह्मपुराणात् , "श्मश्रुकेशनखान् वापयेदक्षिलोमशिखावर्जम् " इति वसिष्ठोक्तेश्च प्रतिवर्णमशौचान्तदिने केशश्मश्रुलोमनखानां यत्त्याज्यं तज्जह्यात् । न कक्षोपस्थशिखाः, न भ्रुवं न चाक्षिलोमानि वापयेत् । गौरसर्षपकल्केन तिलकल्केन वा शिरःस्नानंकरोति वस्त्रशुद्धिं गृहशुद्धिं च करोतीत्याहुः ॥१॥

३३—अशौचान्तदिने क्षौरकरणे कारणद्वयमाहुः । केशश्मश्रुनखान्याश्रित्य पापं तिष्ठतीत्यनुशयनिवृत्त्यर्थमाशौचनिवृत्तिदिने केशादित्यागः कार्य इत्येकम् । एकोद्दिष्टादि श्राद्धमकेशश्मश्रुणा शुचिना कर्तव्यमित्याचक्षते । शरीरात्तु रुधिरस्रावे पुरुषोऽशुचिर्भवतीत्यतः श्राद्धदिने श्राद्धतः पूर्वं क्षौरकरणे रुधिरस्रावसम्भवे श्राद्धव्याघातः संभाव्यते । तस्मादशौचान्त द्वितीयदिने कर्तव्यमाद्यश्राद्धं लक्षीकृत्य, तत्पूर्वदिने दशमदिवसे क्षौरं विधीयते । एवं कृते सति श्राद्धदिने रुधिरस्रावाभावादशुचित्वं नापद्यते, केश श्मश्रुपरित्यागात् शुचित्वं तूपलभ्यते । तदिदं द्वितीयम् ।

३४—"अनुभाविनां च परिवापनम्" इत्यापस्तम्बोक्तेः पुत्रादीनामेव मुण्डनविधिर्नान्येषामित्येके । अनुभाविनः पुत्राद्य इत्यभिमानात् । अथ प्रेतादल्पवयस्कानामेव मुण्डनविधिर्नाधिकवयस्कानामिति विज्ञानेश्वररत्नाकराद्यो दाक्षिणात्याः-"अनुभाविनः कनिष्ठा" इत्यभिमानात् । अशौचमनुभवतां पुंसां सर्वेषां सर्वाशौचे मुण्डनमिति गौडाः-"अनुभाविनः स्वनिष्ठाशौचाभिमानिनः" इत्यभिमानात् । तत्र देशाचारतो व्यवस्था ।३।

३५—"केशश्मश्रूधारयतामग्र्या भवति सन्ततिः" इत्युक्तेर्गृहाश्रमिणो वृथामुण्डनं न कुर्युरन्यत्र विहाराशौचादिनिमित्तेभ्यः । "नीचकेशश्मश्रुणा ब्राह्मणेन भवितव्यम्" इत्युक्तेः पञ्चमे दशमे वा दिने नियमेन सत्र्या केशकर्तनं कारयितव्यम् । " पञ्चमकं दशमकं वा प्रत्यायुष्यम् " इति श्रुतिनिर्देशात् "त्रिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत् " इत्यायुर्वेदाचा-

यैर्महर्षिचरकादिभिस्तथोपदेशाच्च ॥ क्षुरेण भद्राकरणं तु मृतके सूतके बन्धमोक्षणे सन्दीक्षणे राजनिदेशे तीर्थप्राप्तौ चेत्येवंविधे शास्त्रसिद्धे निमित्ते सत्येव कार्यं नान्यथेति बहवः। इदानीं तु लौकिका यथेच्छं चरन्ति । अस्माकं तु मैथिलानां सम्प्रदाये कृतोपनयनानां कव्यौ केशकर्तनं व्यवहारविरुद्धम् । भद्राकरणं तु निमित्तमन्तरेणापि यथेच्छमाचारसिद्धं दृश्यते । तत्र देशाचाराद्व्यवस्था ॥४॥

३६—जननाशौचेऽपि श्मश्रुकर्म कर्तव्यमिति शुद्धितत्त्वादौ स्पष्टम् ॥+॥ इति शुद्धिक्षौराधिकारः ॥११॥

३७—श्रीक्षेत्रादपि दक्षिणोऽधि मिथिलं यो भैरवादुत्तरः
पूर्वो यः खलु लक्ष्मणाख्यसरितो यो गौतमात् पश्चिमः ॥
तस्मिन् संवसथेऽग्रहीद् बहुबुधे गालाभिधे जन्म यः
सोऽयं श्रीमधुसूदनो व्यतनुताऽशौचे समीक्षामिमाम् ॥१॥

इति परिभाषाध्यायः प्रथमः

---

## आशौचसूत्राध्यायः ।

३८—अस्मिन् द्वितीयेऽशौचसूत्राऽध्याये अशौचप्रभवः, सम्बन्धसूत्रम्, यौनिसम्बन्धाः, यौनिसम्बन्धभेदाः, विवाहसापिण्ड्यम्, दायसापिण्ड्यम्, आशौचसापिण्ड्यम्, पिण्डरहस्यम्, विद्यार्त्विज्यसम्बन्धः, प्रेतसंसर्गः, खननदाहौ, उदकदानम्, निमित्तसंसर्गः, आशौचतादात्म्यम्-इत्येते चतुर्दशाधिकाराः प्रदर्श्यन्ते ।

## १—प्रभव-चिन्ता ।

३९—चत्वारि तावन्निमित्तान्याशौचस्योक्तानि;—जन्म, मृत्युः, क्रिया दोष, इति । तत्र जन्माशौचस्य प्रभवः स्त्रीरजः प्रतिपद्यते । तस्य च रजसो मलत्वादियं रजस्वला स्त्री मलिनी भवति । द्विविधा हि शरीरधातवो भवन्ति—प्रसादभूता मलभूताश्च । तत्र गुर्वादयो द्रवान्ता गुणा रसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि च द्रव्याणि प्रसादाउक्ताः ।

ये तु शरीरस्य बाधकराः स्युस्ते मला उच्यन्ते । यथा शरीरच्छिद्रेषूपदेहाः पृथग्जन्मनो बहिर्मुखाः परिपक्वाश्च धातवः, ये चान्येऽपि केचिद्भावाः शरीरे तिष्ठन्तः शरीरस्योपघातायोपपद्यन्ते तान् सर्वान् मलानाचक्षते । अतएवेदमार्तवं मलो व्यवसीयते, पृथग्जन्मत्वाद्बहिर्मुखत्वाच्च । मलानामशुचित्वं स्वात्मानिष्टजनकत्वादुपपद्यते । चेतना च सत्वं च शरीराग्निश्चात्मान उच्यन्ते । तत्र तज्जातीयेनात्मना परित्यक्तोऽर्थस्तज्जातीयायात्मने हितं न भवति । तस्मात्तस्य तदात्मनापेतमशुचित्वं प्रकल्प्यते । तस्य निःसरणसमये मूत्रपुरीषादिनिःसरणसमयवच्छरीरमशुचि प्रतिपद्यते । तत्काले स्पृष्टस्य शरीरस्य परशरीरे स्वगतधर्मसंक्रामकत्वात् । तस्य शुद्धिः शौचप्रकरणेनाम्नाता ॥ १ ॥+॥

४०—अथैतस्या मलिन्याः शरीरस्थश्चत्वारि दिनानि यावत् कमले समुच्चितं पुराणं रजः प्रवर्तते । तच्चातिदुष्टं भवति, दग्धप्रायत्वात्, व्यापन्नप्रायभ्रूणसंकुलत्वाच्च । तत्र असृक्स्थिता भ्रूणकीटा म्रियमाणाः सन्तीत्यतस्तस्या असृजोऽशुचित्वं जायते, तत्संसर्गे चायुः-प्रज्ञा-तेजो-बलाद्यपहीयते-इत्यतोऽयमन्यो विशिष्टो दोषः । तस्य शुद्धिरप्यन्यत्राम्नाता ॥ २ ॥+॥

४१—अथ स्रावपातयोर्डिम्भादिभावापन्ना रजोभागा आत्मना परित्यक्ता बहिर्निःसरन्ति । तेषामात्मना परित्यक्तत्वादेवात्मानिष्टजनकत्वमशुचित्वं चोपपद्यते । शुक्रशोणितजीवसंयोगे तु कुक्षिगते गर्भसंज्ञा भवति । तस्य स्रावे पाते च जीवो निवर्तते । तस्मादप्यशुचित्वं प्राप्नोति । किञ्च—शुक्रशोणितजीवसंयोगरूपोऽयं गर्भो नामाकाशवाय्वग्नितोयभूमिविकारश्चेतनाधिष्ठानभूतः पंचमहाभूतचेतनासमुदायात्मकत्वात् षड्धातुः प्रतिपद्यते । तस्माच्च षड्धातुसमुदायान्महाभूतविकारः पञ्चत्वं प्राप्य चेतनाधातोरधिष्ठानत्वान्निवर्तते, तेषु भूतविकारेषूपपद्यमानमशुचित्वं सम्बन्धसूत्रोपगमादन्यत्रापि संक्रमते । तदिदमशौचमेतत्प्रकरणार्थः ॥३॥+॥

४२—अथ प्रसवे रजोमूला मातृगर्भसन्धानकारिणी काचिदेका नाडी छेद्यते । नाडीच्छेदाच्चायं जातकः सूतीशरीराग्निपरित्यक्तः पृथग् भवति । सूती चेयं जातकशरीराग्निपरित्यक्ता भवति । अन्योन्यपरित्यागादियम-

शुद्धिः सूतिकायां जातके चोत्पद्य सम्बन्धसूत्रेण यावत्सम्बन्धिनि संक्रमते। तदिदमशौचमेतत्प्रकरणार्थः ॥ ४ ॥+॥

४३—तदित्थं जन्माशौचं चेतनाधिष्ठानभूतस्य धातुपञ्चकस्य चेतनाधातुतः पृथग्भावोपपादात्संजातो दोषविशेष एवाशौचमित्युच्यते । एतेनैव मरणाशौचमपि व्याख्यातम् । तत्रापि चेतनाधातोः पृथग्भावादधिष्ठानभूते पाञ्चभौतिकेऽस्मिन्, शवशरीरे दोषोत्पत्तेस्तुल्यत्वात् । एतदप्यशौचं निष्प्राणाङ्गे शवे सम्भूय सम्बन्धसूत्रेण यावत्सम्बन्धिनि संक्रमते, कालेन चापनोद्यते । तदिदमशौचमेतत्प्रकरणार्थः ॥ ५ ॥+॥

४४—एतेनैवोत्तरक्रियानिमित्तमप्याशौचं व्याख्यातम् । शवनिष्ठामेध्यतायाः स्पर्शादिसम्बन्धेनान्यत्र संक्रमणात् ॥ ६ ॥+॥

४४—अथ चेतना, सत्वं, शरीरं, चेत्येतत्त्रितयं पुरुष इत्युच्यते । तत्रायं चेतनाधातुः पर आत्मा निर्विकारः सर्वभूतानां निर्विशेषश्च । सत्वशरीरयोस्तु विशेषाद्विशेषोपलब्धिः । तत्वादारभ्य प्रवृत्तायां सन्ततिपरम्परायां शततमं सहस्रतमं लक्षतमं वा ततोऽप्यूर्द्ध्वतमं यावदुपलम्भं वा पुरुषमभिव्याप्यायं गोत्रव्यवहारः शक्यःकर्तुम् । किन्तु न तेषु सर्वेष्वविशेषेणेदमाशौचमभिसम्बध्यते । मूलपुरुषादेकविंशं पुरुषं यावदेव यथाकथञ्चिदाशौचाभिसम्बन्धस्य नियतत्वात् । तत्रापि नाविशेषेण सर्वत्र समानोऽभिसम्बन्धः । किन्तु यथा यथा मूलपुरुषाद्विप्रकर्षो घटते तथा तथा तद्व्यापारकेऽशौचादिधर्माभिसम्बन्धेऽपि तारतम्यमुपपद्यते । तादृशतारतम्यानुरोधेनैवेदं गोत्रं सप्तसंस्थं कृत्वा विभज्यते । तथाहि—

१ त्रिपुरुषं यावत्— सन्निहितसपिण्डः स संनिकृष्टतमः । ३
२ सप्तपुरुषं यावत्— सपिण्डः स संनिकृष्टतरः । ४
३ दशपुरुषं यावत्— सकुल्यः स संनिकृष्टः । ३
४ चतुर्दशपुरुषं यावत्— सोदकः स मध्यमः । ४
५ सप्तदशपुरुषं यावत्— सन्निहितसगोत्रः स विप्रकृष्टः । ३
६ एकविंशपुरुषं यावत्—सगोत्रः स विप्रकृष्टतरः । ४
७ चतुर्विंशं यावत् तदूर्द्ध्वं च यथेच्छं ज्ञातिः स विप्रकृष्टतमः । ३

च द्वौ दोषौ—रजस्तमश्च । तौ सत्त्वं दूषयतः । तया च विशुद्धं सत्त्वं प्रसादः । सत्त्वसम्बन्धाच्च विशुद्धा चेतनोपलभ्यते स प्रसादः । अथ तमः प्राधान्ये सति सत्त्वमविशुद्धं विदूषितं भवति । तदिदं दूषणमात्मनः शरीरस्य चोपघाताय प्रभवतीत्यतस्तस्य तमसो मलत्वमिष्यते ॥ तन्नि बन्धनममेध्यत्वमेव दोषाशौचम् । तद्धि दोषिवत्वशरीरस्थं तत्संसर्गिषि-च प्रवर्तते । तदिदमप्येतत्प्रकरणार्थः ॥७॥×॥

४६—तदित्थं निवृत्तचेतना भूतविकाराश्चेतनापकर्षकधर्मश्चानर्थश्चाशौचप्रभव इति सिद्धम् । प्रादुर्भावस्थानं प्रभवशब्देनाख्यायते । इति प्रभवविचारः ।

## (२) सम्बन्धसूत्रम् ।

४७—व्यक्तिविशेषे कथंचिदुत्पद्यमानमशौचं तत्र व्यक्तौ निभृतमवस्थाय व्यक्त्यन्तरेऽपि संक्रमते । तच्च नाविशेषेण सर्वासु मनुष्यव्यक्तिषु यथेच्छं संक्रमते । किन्तु नियतं किञ्चित् संक्रमणद्वारमपेक्षते । तच्च द्वारं चतुर्विधः सम्बन्धः—यौनिकृतः, विद्याकृतः, यज्ञकृतः, संसर्गकृतश्चेति । एषामन्यतमोपि सम्बन्धो यत्र नोपपद्यते तत्र व्यक्तौ नेदमघं समासज्जते । एतेषामेव चतुर्णां सम्बन्धानामघसंक्रामकत्वनियमात् । एतेषामेव च सम्बन्धानां तारतम्येनाशौचसंक्रमणेऽपि तारतम्यं घटते । अशौचस्यैतन्मूलकत्वात् । तस्मादघस्थितिज्ञानार्थं सम्बन्धसूत्रं याथातथ्येन विजानीयात् । इति सम्बन्धसूत्रविचारः ।

## (३) योनिसम्बन्धाः ।

४८—कुलश्चिदेकस्मात् पुरुषादारभ्य प्रवृत्ता संततिपरम्परा गोत्रम् । एकस्मिन् गोत्रे परिदृष्टानामेकशाखानां भिन्नशाखानां वा तत्सम्बन्धिनां वा पुरुषाणां परस्परं यः सम्बन्धः स यौनिकृतः । यस्मात् पुरुषाद् गणनामारभ्य यद्गोत्रं निरूपयितुमिष्यते तत्र गोत्रे स बीजी पुरुषो मूलपुरुषः कूटस्थ इति चोच्यते ॥ तस्मान्मूलपुरुषादारभ्य प्रवृत्तायां संततिपरम्परायां शततमं, सहस्रतमं, लक्षतमं वा ततोऽप्यूर्द्ध्वतमं यावदुपलम्भं वा पुरुषमभिव्याप्यायं गोत्रव्यवहारः शक्यंकर्तुम् । किन्तु न तेषु सर्वेष्वविशेषेणेदमाशौचमभिसंबध्यते । मूलपुरुषादेकविंशं पुरुषं यावदेव यथाकथंचिदाशौचाभिसंबन्धस्य नियतत्वात् । तत्राऽपि नाविशेषेण सर्वत्र समानोऽभिसंबन्धः । किन्तु यथा यथा मूलपुरुषाद् विप्रकर्षो घटते

